# प्रस्तावना

प्रियमहाभागाः—

केचिन्निरवधिविशंकटाजवंजवजलनिधिविलसितविविधारुंतुदनक्रशंबूकसंजनितामितभीतिभारचंचुरचेतसः सुचेतसः विरहितनिखिलव्यसननिकरसंभूतानघस्वस्वरूपालयं कमप्यालयं गवेषमाणाः परिधावमानाश्चाहरहस्तत्संगमसमीहयाऽवतरंत्यनुभूतिगोचरतां परितो भुवि। परं पितृपैतामहसंपदनादिदुर्वासनानिचितांतःकरणत्वात् वास्तविकात्मतत्त्वावबोधबहिर्भूतसर्वज्ञमन्यस्वार्थिमर्त्यप्रतारितात्मत्वात् कल्पितविफललोकापवादसमुत्पत्स्यमानभयाकीर्णत्वाद्वा न नाम चेतयंते ते-आत्मनीनस्वरूपं स्वायत्तया। किंतु न तथाविधपक्षपातार्हाः मनस्विनः। न वा तेषां पक्षपातो धर्मः। असुभृत्समष्टिसमीहितपरिपूरणकल्पमहीरुहा हि संतः समादरणीयस्तै निहत्य विकल्पं विभाव्यात्मनीनमनीषया समीचीनः पन्थाः। विनिमय्यैवं समुन्नीयते प्रकाशपदवीं तात्त्विकात्मस्वरूपप्रतिभासकमिदं **समयप्राभृतं।**

समवगतिरियं महती विदुषां यत्सत्तावस्थापनेषु सांख्यमीमांसाप्रभृतिनैकविधशास्त्रनिकरेषु समवबोधयति यथा याथात्म्येनात्मनः स्वरूपं परमात्मप्रीतिं च वेदांतशास्त्रं न तथापरं। अवितथं चैतत् यावन्न भवत्यात्मस्वरूपाविर्बोधः स्वात्मनि, न विरज्यते तावदनात्मनीननितंबिनीसूनुसुहृत्संपद्भिरात्मा। आत्मस्वरूपावगतिरेव वैराग्यं तच्च यदि शिक्षयति तद्वेदांतशास्त्रमेव कथंचित्।

भारतव्यतिरिक्त-इंगलैंडादिदेशानामपि संढौके संप्रति सन्मानसरणिं वेदांतशास्त्रं। समाविरभाविषत कियंत्यश्चित् परिषदस्तत्र परितो वेदांतशास्त्रानवद्यसिद्धांतप्रसाराय। मथ्नंति च शेमुषीमंथनदंडेन तद्रसघृतसमीहया तच्छास्त्रसिद्धांतक्षीरमहरहस्ते।

विभाव्य वेदांतशास्त्रस्य तथाविधविचित्रसन्मानततिं, अमलात्मस्वरूपलिलिक्षां च बहुलतया पक्षपातबहिर्भूतानां स्वपरहितैषिणां च सुमनीषिणां समुपानीयते कथंकथमपि समाविर्भाव्यैतत्समयप्राभृतं तेषां पुरस्तात्। समेति-समीचीनतया जानातीति समय आत्मा तस्य प्राभृतं-शास्त्रमित्यनुगतार्थं बिभ्राणं नामेदं-आत्मन एव कृतो विचारोऽत्र शास्त्रे-इति समाविर्भूयते। दिगंबरजैनसमाजे प्राभृतमिदं जैनवेदांताध्यात्मशास्त्रनामभ्यां विश्रुतं स्वीयानवद्यात्मस्वरूपविवरणशैलीप्रभावात्। नात्र चित्रं प्राभृतरचयितुः श्रीमद्भगवत्कुंदकुंदस्य कृतिसर्वस्वमंतर्द्धिभाव्यते। पूर्वं जिनागमतः समवगम्यात्मस्वरूपं स्वात्मना च पश्चादनुभूय स्वपरात्मस्वरूपसमास्वादसमीहया व्यलेखीदं महीयान् ग्रंथो महता प्रयासेन जनसमुदयहिताय तेन भगवता।

एतच्छास्त्रसमुपवर्णितसिद्धांताः सर्वथा वेदांतशास्त्रसमाहितसिद्धांतसाम्यं प्रतिपद्यंते-इति तु न शक्नुमो वयं प्रतिपादयितुं यतो हि—आर्हतसिद्धांते वरीवरीति नयद्वयमादिष्टं। तत्र नात्मनः परकीयं ललनात्मजादिवस्तु-आत्मनीनमिति हि शुद्धनिश्चयविषयः। परकीयवस्त्वपि कथंचित्संबंधितां बिभर्ति घृतकुंभवदिति व्यवहारविषयः। नैतावता ब्रह्म विहाय परवस्त्वेव नास्तीति जैनवेदांतमतं। इतरवेदांते च वस्तुतस्तु वस्तु ब्रह्मैव तदपरं सकलं कल्पितं ततो न सामस्त्येन जैनवेदांतेतरवेदांतयोस्तौल्यं। संबंधमात्रतः परं वस्तु नात्मनः [ब्रह्मणः] परवस्तुन्यात्मत्वाभिमानो मिथ्येति इतरवेदांतसिद्धांतत्वे सम्मतमेव तज्जैनवेदांतस्यापि। कियतां चिदन्येतरवेदांतसिद्धांतानां विमतत्वेऽपि सम्मतत्वमपि कियतां चिदपरं। नात्र संशीतिः सकलोपाधिविरहितत्वेनोपासनं तु ब्रह्मण इतरवेदांतस्य पुष्णात्येव निष्कल्मषं तुल्यत्वं जैनवेदांतस्य।

विशदतया कियतां चित्सिद्धांतानां समत्वाविर्भावाय व्यचारि मया परं नाशंकं तथाकर्तुमहमनवकाशतया। मत्कृतसमत्वत एव वा मा तुष्युर्विद्वांसः स्वयं चोभयोस्तौल्यं विनिर्णयासुरिति च विनिचाय्य बुद्धापि

नाविरभावि मयां तयोस्तुल्यत्वं । ततोनिरवद्यात्मस्वरूपावजिगिमिषवो विद्वांसो नियतं विचारयेयुरेतत्प्राभृत-रहस्यमिति सप्रश्रयं तेषां पुरस्तान्मामकाभ्यर्थना ।

समयप्राभृतसंपादनकाले आदिमस्यांकस्याविर्भावार्थं तात्पर्यवृत्त्यात्मख्यात्योः पुस्तकद्वयस्य कियांश्चि-द्भागः १०८ अभिनवभट्टारक-ईडरस्थ-श्रीमद्विजयकीर्तिजीमहाराजैः प्रेषितं, तात्पर्यवृत्तिद्वयं च जैनमित्र-संपादकश्रीमद्ब्रह्मचारिशीतलप्रसादजीमहात्मभिः प्रहितं आत्मख्यातिपुस्तकैकं च सत्यवादि-संपादकसुहृद्वरविद्वद्वरश्रीपंडित—उदयलालजीमहोदयैः समुपलब्धं ततोऽस्म्यहं गरीयानुग्रहभाजनं संश्रुतोक्तमहात्मनां विदुषां च। समीहे चायतिकालीनां तथाविधामेव सकलजनताहितकारिणीमनुकंपामिति ।

कियतीनां चिह्नाथानां परिच्युतत्वादात्मख्यातौ, समुल्लेखाच्च तासां तात्पर्यवृत्तौ अकृत किल तात्पर्यवृत्त्य-नुसार्येव पाठक्रमः श्रीसमयप्राभृतस्य ततोमूलपाठस्तात्पर्यवृत्त्यनुसार्येव विभावनीयः । विषयक्रमोऽपि समय-प्राभृतस्य तात्पर्यवृत्त्यनुगामी । चतुर्विंशतितमगाथाधस्ताद्विलिखितात्मख्यातिर्द्वाविंशतमाया गाथाया ज्ञातव्या

भगवत्कुंदकुंदस्वामिनो जीवनेतिवृत्तं प्राकाशि जैनहितैषिसंपादकपंडितश्रीनाथूरामजीमहो-दयैः स्वीये जैनहितैषिपत्रे तदेवेनाधिकीकृत्य समाविर्भावितमत्र । ततोऽस्म्यहमुपग्राह्यो भूयानुक्तमहा-नुभावानां ।

नाकार्षमहं कियतां चित्प्रष्ठानां संपादनमितस्ततो नैमित्तिकभ्रांत्या वैकल्यतश्च । प्राकाशिषतता, अशुद्धयः शोधनपत्रे तथापि दृष्टव्यविषयं भवेत्क्वापि स्खलनं परिमार्ज्य तत्क्षमनीयोऽहं सुविचारचेतोभिर्मनीषिभिरिति सप्रणतिमभ्यर्थना ।

साक्षरानुचरो
**गजाधरलालः**



# श्रीमद्भगवत्कुंदकुंदाचार्याः ।

प्रियपाठकमहाशयाः—

श्रीमन्महावीरजिनवरपरमनिश्रेयसप्रापणानंतरमजनिपत नैकविधागमपयोमरालायमाना आर्हतमत-हर्म्यस्तंभायमानाश्च भुवि गरीयांसोऽनेकविद्वांसः । परं पूज्यतामहत्तयोः परमावधिं तेषु भगवान् **श्रीकुंदकुंदाचार्य** एव समुपालभत । प्रतिवादिकरिनिकरपंचलपनायमानैर्गरीयोभिर्विद्वद्भिः समाविरभावि यत्र कुताश्चिदात्मनीनपरिचितिस्तत्र 'वयं भगवत्कुंदकुंदान्वयिनस्तदनुयायिनश्चेति प्रतिपादयद्भिरेव तैः सानंदमवाबोधि स्वीयं सौभाग्यं । अद्यत्वेऽपि भगवान् कुंदकुंदः तीर्थप्रवर्तकधर्मसंस्थापकसामान्येनैव दिगम्बरसमाजे प्रतिष्ठाप्यते । आर्हतमतामलतत्त्वतत्पवित्रतासंरक्षकेषु भगवत्कुंदकुंद एवाभून्मुख्यः । दिगम्बरजैनसंप्रदायस्य बहुलतमांशः किल सांप्रतं भगवत्कुंदकुंदजाल्पितसरणिशरण एव विभाव्यते, किंतु सत्यप्येवं भगवत्कुंदकुंदः क आसीत् ? कदा, क, परमपावनात्मनीनवैदुष्येण भारतभूमिं विभूषयामास ? इति नांशमात्रमपि जानीमो वयं । भक्तिवशंवदतया तद्विषयं किमपि वृत्तं परिचाययितुं समाश्रयंतोऽपि **परंपरासरणिं** भ्रमाकीर्णत्वात्तस्य नात्मकामनां कर्तुं फलवतीं पारयामः । ततः परिश्रमतमत्वेऽपि भगवत्कुंदकुंदपरिचयसमाविर्भावाय नियतं विद्वद्भिः सुदृढप्रतिज्ञैर्भवितव्यमिति सनतिं तेषां पुरस्सरमास्माकीनाभ्यर्थना ।

भगवत्कुंदकुंदविषयकं यत्किमपीतिवृत्तं समवाबोधि, समुपानीयते विदुषां पुरस्तात् तदस्माभिरत्र—

## नामविचारः

प्राथमिकः प्रधानश्चाभिधेयः श्रीमद्भगवत्कुंदकुंदस्य **पद्मनंदीति** । परं विश्रुतिर्बहुलतयाद्यत्वेऽस्य महात्मनः **कोण्डकुंदनाम्ना कुंदकुंदेन** वा । आसीचायं **कोण्डकुण्डा**भिधनगरवास्तव्यस्ततोऽनुमीयते नागरिकाभिधेयंश्रायमात्मविश्रुतिं प्रत्यपद्यत । कोण्डकुंदेतिकर्णाटकभाषीयं नाम तस्य श्रुतिकटुकतया संस्कृतकविभिः समस्ति परावर्तितं श्रुतिमधुरकुंदकुंदरूपेणेति । श्रीमदिंद्रनंदिसूरिभिर्व्यलेखि स्वविरचितश्रुतावतारग्रंथे-

> एवं द्विविधो द्रव्यभावपुस्तकगतः समागच्छन्
> गुरुपरिपाट्या ज्ञातः सिद्धांतः **कोण्डकुण्डपुरे** ॥ १६० ॥
> श्रीपद्मनंदिमुनिना सोऽपि द्वादशसहस्रपरिमाणः
> ग्रंथपरिकर्मकर्ता षट्खंडाद्यत्रिखंडस्य ॥ १६१ ॥

अमुना पद्येन श्रीमन्मुनिवरपद्मनंदिवासः **कोण्डकुण्डपुर** एव निश्चीयते। अन्येऽपि समभूवन् भूयांस आचार्याः कार्णाटकदेशे, समुपालेभिरे ये स्वनिवासस्याननाम्नैव भुवि विश्रुतिं यथा **श्रीतुम्बुलूराचार्यः** । प्राथमिकं नाम श्रीमत्तुंबुलूराचार्यस्य **वर्धनदेव** आसीत् परं तुम्बुलूरग्रामनिवासित्वादयमाचार्यपादो विश्रुश्राव तुम्बुलाचार्याभिधया । विलिखितं श्रुतावतारे तदुल्लेखसमये—

**'अथ तुम्बुलूरनामाचार्योऽभूत्तम्बुलूरसद्ग्रामे' इति**

नवमे दशमे च **श्रवणबेलगुलशिलालेखे** श्रीमत्कुंदकुंदाचार्यस्य समुल्लेखः खलु पद्मनंदि-कुंदकुंदेतिनामद्वितयेनैव कृतः । एवमन्यत्रापि । किंतु नंदिसंघपट्टावल्यामस्य पावनात्मनः कुंदकुंद–वक्रग्रीव–एलाचार्य–गृध्रपिच्छ–पद्मनंदीतिनामपंचकमभाणि—

> ..........................
> ततोऽभवत्पंचसुनामधामा श्रीपद्मनंदी मुनिचक्रवर्ती ।
> आचार्यः कुंदकुंदाख्यो वक्रग्रीवो महामतिः ।
> एलाचार्यो गृध्रपिच्छः पद्मनंदीति तन्नुतिः ॥४॥

गृध्रपिच्छ-वक्रग्रीव-एलाचार्येति नामत्रिकमन्यदप्यास्ति श्रीमत्कुंदकुंदाचार्यस्येति पट्टावलीस्थपद्यपंक्तीनामासामत्र तात्पर्यं ।

कुतश्चिदसाधारणकारणसंपातात्तिरोभूतत्वात्पुरातनपट्टावलीनां तत्स्थाने—अनुमानतः, कल्पनावलतः पूर्वापरविरुद्धामिलिताकियद्विरपराचीनोल्लेखैश्चेमा विरचिताः संत्यभिनवाः पट्टावल्यः शतद्विशतसांवत्सरिकैर्भट्टारकैः । ततः समुपलब्धाधुनिकपट्टावल्यः सर्वथा संशीतिकारणत्वान्न प्रमाणतामंचंति । नंदिसंघपट्टावल्यपि तथाभूतैव । एवं च तल्लिखितगध्रपिच्छ इति नाम न भगवत्कुंदकुंदस्वामिनः किंतु-भगवदुमास्वामिनः-उमास्वातेर्वा । अत्र नैकानि प्रमाणानि संति यथा—

तत्त्वार्थसूत्रकर्तारं गृध्रपिच्छोपलक्षितं
वंदे गणींद्रसंजातमुमास्वामिमुनीश्वरं ॥ १ ॥

तत्त्वार्थप्रशस्तिः

तस्यान्वये भूविदिते बभूव यः पद्मनंदिप्रथमाभिधानः
श्रीकुंदकुंदादिमुनीश्वराख्यः सत्संयमादुद्गतचारणर्द्धिः ॥ ४ ॥
अभूदुमास्वातिमुनीश्वरोऽसावाचार्यशब्दोत्तरगृध्रपिच्छः
तदन्वये तत्सदृशोऽस्ति नान्यस्तात्कालिकाशेषपदार्थवेदी ॥ ५ ॥

४० तमः श्रवणबेलगुललेखः

तदीयवंशाकरतः प्रसिद्धादभूददोषा यतिरत्नमाला
बभौ यदंतर्मणिवन्मुनींद्रस्स कुण्डकुण्डोदितचंडदंडः ॥१०॥
अभूदुमास्वातिमुनिः पवित्रे वंशे तदीये सकलार्थवेदी
सूत्रीकृतं येन जिनप्रणीतं शास्त्रार्थजातं मुनिपुंगवेन ॥११॥
स प्राणिसंरक्षणसावधानो बभार योगी किल गृध्रपक्षान्
तदा प्रभृत्येव बुधा यमाहुराचार्यशब्दोत्तरगृध्रपिच्छं ॥१२॥

मंगराजकविकृतशिलालेखः ।

एतत्प्रमाणातिरिक्तान्यन्यान्यपि—उमास्वामिनो गृध्रपिच्छनामत्वे संति तानि च संकीर्तितानि स्युर्यथावसरं पुरस्तात् ततोऽनया प्रमाणसमष्ट्या नियतं निर्धार्यते नाभवत् भगवत्कुंदकुंदस्य गृध्रपिच्छ इति नाम ।

विमुच्य प्रतिपादितपट्टावलीं वक्रग्रीवनामापि कुंदकुंदस्य नोपलभ्यते क्वाप्यन्यत्र, किंतु तन्नाम्नापर एव कश्चिदाचार्यो व्यश्रौषीद्भुवि । श्रवणबेलगुणमल्लिषेणप्रशस्तौ समुदीरितश्चायं तदुल्लेखः—

वक्रग्रीवमहामुनेर्दशशतग्रीवोऽप्यहींद्रो यथा
जातं स्तोतुमलं वचोबलमसौ किं भग्नवाग्मिव्रजं
योऽसौ शासनदेवताबहुमतो ह्रीवक्रवादिग्रह-
ग्रीवोऽस्मिन्नथ शब्दवाच्यमवदन्मासान्समासेन षट् ॥ इति ॥

कथितमल्लिषेण प्रशस्तौ च ।

**'वंद्यो विभुर्भुवि न कैरिह कोण्डकुंदः'**

इति पूर्वं कुंदकुंदं समुपवर्ण्य ततश्च **समंतभद्रं** **सिंहनंदिनं** च समुल्लिख्य पश्चाद्वक्रग्रीवः संस्तुतस्ततो समनुमन्यते भगवत्कुंदकुंदतोऽन्य एव कश्चित् समजनि परवादिमुग्नभारतीग्रीवो वक्रग्रीवो विद्वान् न कुंदकुंद एव वक्रग्रीवः पट्टावलीलेखकाधारात् ।

नांचति किमपि गमकमत्रापि दृष्टिगोचरतां यत्कुंदकुंदस्वामिन एवाभूदेलाचार्य इत्यभिधेयः । किंत्वपर एव कश्चित् प्रत्यपद्यताऽभिधयानया प्रत्यग्रविद्यो विद्वानेलाचार्यः । स चासीच्चित्रकूटपुरवास्तव्यः । तत्समीपे च **भगवज्जिनसेनगुरुर्वीरसेनः** प्राध्यैष्ट सुकरतयानवद्यसिद्धांतशास्त्रं । तत्र गमकं—

काले गते कियत्यपि ततः पुनश्चित्रकूटपुरवासी
श्रीमानेलाचार्यो बभूव सिद्धान्ततत्त्वज्ञः ॥ ७७ ॥
तस्य समीपे सकलं सिद्धान्तमधीत्य वीरसेनगुरुः
उपरि तमनिबंधनाद्यधिकारानष्ट च लिलेख ॥ १७८ ॥

## कुन्दकुन्द उमास्वामी च ।

कुन्दकुन्दोमास्वामिनोः कः पारस्परिकसंबंध आसीदित्यत्र मतात्रिकं–उमास्वामिनो गुरुरासीत्कुंदकुंद इत्याद्यं । कुंदकुंद एव शिष्य उमास्वामिन इति द्वितीयं । तृतीयं कुंदकुंद एवोमास्वामीति । परन्तु येषु सत्सु श्रवेणबेल्गुलशिलालेखेषु भगवत्कुंदकुंदसमुल्लेखस्तेषु-भगवदुमास्वामी श्रीकुंदकुंदांतेवासीति प्रथमप्रमाणात् । पट्टावलीलेखकश्च–उमास्वाम्येव कुंदकुंदस्य शिष्य इति संपुष्य समाविरभावि श्रीकुंदकुंदगुरुर्जिनचंद्र इति द्वितीयप्रमाणात् । अनेकेषु ग्रंथेषु कुंदकुंदस्यानुल्लिख्योमास्वमिनं गुरुं तदपर एव विलिखित इति तृतीय प्रमाणाच्च नियतं विज्ञायतंऽस्माभिः–उमास्वाम्येव कुंदकुंदस्यांतेवासीत्यस्मन्मतानुसार्याद्यस्यैव श्रेयस्त्वं सिद्धांतस्येति ।

श्रीमानुमास्वातिरयं यतीशस्तत्त्वार्थसूत्रं प्रकटीचकार ।
यन्मुक्तिमार्गे चरणोद्यतानां पाथेयमर्घ्यं भवति प्रजानां ॥ १ ॥
तस्यैव शिष्योऽजनि गृद्धपिच्छो द्वितीयसंज्ञस्य बलाकपिच्छः ।
यत्सूक्तिरत्नानि भवन्ति लोके मुक्त्यंगनामोहनमंडनानि ॥ १ ॥

इति पद्यद्वयं यशोधरचरितभूमिकायां कस्याचिद्ग्रंथस्य समुद्धृतं । अमुना पद्यद्वयेन समुत्पद्यते गरीयसी संशीतिरियं यद्गृध्रपिच्छ इतीदं नाम न भगवदुमास्वातेः किन्तु कस्याचित्तच्छिष्यस्य स च कुंदकुंद एव स्याद् । पट्टावलीलेखकेनापि च गृध्रपिच्छ इति नाम कुंदकुंदस्य समाविरभावि परंतु भ्रांतिरेवेयमेकांन्तेन । बलाकपिच्छः खलु भगवदुमास्वामिशिष्यस्यांन्तेवास्यासीत् समुपवर्णितश्चानेकत्र भगवदुमास्वाति शिष्यशिष्यत्वेन सः । निष्टंकितं चैतत् गृध्रपिच्छेतिनाम भगवदुमास्वातेरेव । यदि तच्छिष्यस्यापि श्रूयते तदा तस्य भगवदुमास्वामिशिष्यत्वेनैवेति विभावनीयं ।

कुंदकुंद एवोमास्वातिरिति तृतीयमतसमुल्लेखः सर्वार्थसिद्ध्यवतरणिकायां प्राकाशि निटववंशोद्भवपंडित–कल्लापाभरमापामहोदयैः परन्तु तयैरैक्ये बलवत्प्रमाणाभावात्, एकैश्च संस्कृतभाषायां गूढगभीरदर्शनशास्त्रप्रतिपादकः, अपैरश्च प्राकृतभाषायां सरलतमभाषयाध्यात्मशास्त्रनिदर्शक इत्युभयो र्विभिन्नरचनासमालोचनाच्च न हि कुंदकुंदोमास्वामिनोरैक्यं प्रामाण्यमास्कंदति—तयोरैक्यकल्पनासमुत्पत्तिस्तूभयोर्विदेहगमनात्, उभयोर्वा गृध्रपिच्छेतिनामसमालोचनात् भ्रांत्याभूदिति निश्चीयते

## भगवत्कुंदकुंदगुरुः

भगवत्कुंदकुंदस्य पाठयिता गुरुः क आसीदित्यत्रापि मतपार्थक्यं—पूर्वोद्धृतपट्टावलीपद्यद्वितयेन विभाव्यते माघनंद्याचार्यांतेवासी गुणचंद्रस्तच्छिष्य उत्तराधिकारी वा भगवान् कुंदकुंदः समभूत् इति व्यावर्णितः ।

---

१ श्रीमूलसंघेऽजनि नंदिसंघस्तस्मिन् बलात्कारगणोऽतिरम्यः ।
तत्राभवत्पूर्वपदांशवेदी श्रीमाघनंदी नरदेववंद्यः ॥ १ ॥
पदे तदीये मुनिमान्यवृत्तौ जिनादिचंद्रः समभूदतन्द्रः ।
ततोऽभवत्पंच सुनामधामा श्रीपद्मनंदी मुनिचक्रवर्ती ॥१ ॥

२ श्रीगृध्रपिच्छमुनिपस्य बालकपिच्छः शिष्योऽजनिष्ट भुवनत्रयवर्तिकीर्तिः
चारित्रचंचुरखिलावनिपालमौलिमालाशिलीमुखविराजितपादपद्मः ॥ १ ॥ श्रवणबेलस्य ४० तमोलेखः,

३ उमास्वातिः ४ कुंदकुंदः ।

अथ श्रीकुमारनंदिसैद्धांतिकदेवशिष्यैः प्रसिद्धकथान्यायेन पूर्वविदेहं गत्वा वीतराग सर्वज्ञसीमंधरस्वामितीर्थकरपरमदेवं दृष्ट्वा च तन्मुखकमलविनिर्गतदिव्यवाणीश्रवणादवधारितपदार्थसमूहैर्बुद्धात्मतत्त्वादिसारार्थं गृहीत्वा पुनरप्यागतैः श्रीमत्कुंदकुंदाचार्यदेवैः पद्मनंद्यपरनामधेयैरंतस्तत्त्वबहिस्तत्त्वगौणमुख्यप्रतिपत्त्यर्थं — अथवा — शिवकुमारमहाराजादिसंक्षेपरुचिशिष्यप्रतिबोधनार्थं विरचिते पंचास्तिकायप्राभृतशास्त्रे यथाक्रमेणाधिकारशुद्धिपूर्वकं तात्पर्यार्थव्याख्यानं कथ्यते-

इति श्रीमज्जयसेनाचार्यकरकल्पमहीरुहखचितसमयसारसंस्कृतटीकालिखितगद्यतश्च पद्मनंदीत्यपराभिधाविभूषितश्रीकुंदकुंदभगवान् कुमारनंदिसैद्धांतिदेवशिष्यः प्रकटीकृतः । किंतु मतद्वयमपीदमर्वाचीनतमत्वान्न प्रामाणिकीं तथ्यतामवांचति । यतः—

श्रुतावतारे—अर्हद्बलेः पश्चान्माघनंदिनस्तदनंतरं च धरसेनादिगुरूणां समुल्लेखः कृतः न माघनंद्यनंतरं गुणचंद्रस्य नापि कुमारनंदिनः । श्रवणबेलगुललेखेष्वपि न क्वापि श्रीकुंदकुंद गुरोरुल्लेखो दृष्टिपथमवातरत् किंतु महीपतिचंद्रगुप्तवर्णनासमनंतरं कुंदकुंदभगवानेव समुपवर्णितः । प्रारब्धा च गुरुपरंपरा श्रीमत्कुंदकुंदत एव तद्वर्णनायां । नंदिसंघस्य प्रधानारातीयः श्रीकुंदकुंद एवाजीगणत्, इति न केनापि विजज्ञे क आसीत्कुंदकुंदभगवद्गुरुः ? स्वरचितग्रंथेष्वपि क्वापि नोल्लेखयांचक्रे कुंदकुंदभगवानात्मनीनं गुरुमिति ।

## शिष्यपरंपरा

श्रीमद्भगवत्कुंदकुंदाचार्यः समजनिष्ट नंदिसंघस्य नंदिगणस्य वा प्राथमिकाचार्यः । समस्ति कश्चित् १११९ तम–ए. डी. शताब्दिसन्निकृष्टः शिलालेखः । तत्र व्यलेखि विस्तरतया समुल्लेखः श्रीकुंदकुंदशिष्य परंपरायाः । स्थानाभावादप्रकाशयंतोऽपि वयं तं, समुद्भावयामः कियन्तं चित्सारं—

श्रीमत्पद्मनंदिनोऽपराभिधेयः कुंदकुंद आसीत् । स च समियाय चारणर्द्धिं प्रखरामलाचारणमाहात्म्यात् । समजनि च तस्योमास्वातिः शिष्यः । गृध्रपिच्छाचार्यनाम्नापि स समुपालेभे भुवि विश्रुतिं । नाभूच्च पद्मनंद्यन्वये गृध्रपिच्छसमः कश्चिदन्यः प्रखरविद्वान् । तस्य च नैकनरपातिपरिपूजितचरणः वोभवतिस्म बलाकपिच्छः शिष्यः । बलाकपिच्छस्यांतेवासी च तर्कव्याकरणसाहित्यादिनिगमागमजलनिधिसमाहितपारो यतिश्च समजनि गुणनंदिविद्वान् । गुणनंदिनश्च त्रिशतशिष्या समभूवन् तेष्वपि कठिनतममपि विषयं सुलभतया व्याख्यातृत्वात्, प्रमाणतत्त्वावबोद्धृत्वात् सिद्धांतशास्त्रस्य वेत्तृत्वाच्च समभून्निखिलांतेवासिशिरोमणिः श्रीदेवेंद्रविद्वान् । देवेंद्राचार्यांतेवासी सिद्धांतचक्रवर्ती वा कमिनीवल्लभश्च बभूव कलधौतनंदी ( कनकनंदी ( ? । ) तस्य च पुत्रो मदनशंकरो महेंद्रकीर्तिर्वा समजनि । तच्छिष्यश्च श्रीवीरनंदी स च कविचूडामणिः, गमकः महावादी, वाग्मी च जातः । इत्यादि ।

तृतीयमंगराजरचितशिलालेखेऽपि पद्मनंदि–उमास्वाति—बलाकपिच्छेत्याचार्यत्रयवर्णनानंतरं संस्तुताः समंतभद्र—पूज्यपाद–अकलंकप्रभृतयः सूरयः । किंतु न क्वापि समुल्लिलिखे समंतभद्रः किल बलाकपिच्छस्य शिष्य आसीदिति । परं तद्वंशपरंपरायामभूदिति लेखः । ४०तमे शिलालेखेऽपि यत्र बलाकपिच्छवर्णनानंतरं समंतभद्रपूज्यपादौ स्तुयेतेस्म तत्र समंतभद्रः—बलाकपिच्छपरंपरायामेव समजनि न तु तच्छिष्य इति समाविरभावि सुस्पष्टतया ।

परंतु लेखद्वितयमपीदं न नंदिसंघपट्टावलीसमतामवांचति । नंदिसंघपट्टावल्यास्तु परंपरेयं—उमास्वातिः, लोहाचार्यः, यशःकीर्तिः, यशोनंदी, देवनंदी, (पूज्यपादः) गुणनंदीत्यादयः । संभाव्यते पट्टभेदाद्भवेदयं भेदः । पट्टावलीरचयितारो वा प्रमाणाभावेऽप्यनुमानतस्तं क्रमं लिलिखुरिति ? ।

## स्थानं ।

श्रुतावतारलेखतः समनुभूयते-समभूद्भगवान् कुंदकुंदः संभाव्यमानकर्णाटकप्रांतांतर्गतकोण्डकुण्डपुरे । यदा भद्रबाहुस्वामिसमानकालीनः समजनि गरीयान्दुष्कालस्तदा, अगाद्विशालसंघो मुनीनां मुनिवर-भद्रबाहुणा समं कर्णाटकदेशं । समजनि च तदात्वे चारित्रशैथिल्यादत्र श्वेतांबरदिगंबरविभागः । विनिर्धार्यते संजायमाने किल भेदद्वये दिगंबराचार्यैर्दक्षिणकर्णाटकदेशः श्वेतांबरैश्च गुर्जरः, उत्तरभारतश्च विचक्रे स्वीयं प्रधानस्थलं । कियत्कालप्रागेवास्माद्भेदात्समजनि श्रीकुंदकुंदभगवान् । अतः कर्णाटकप्रांत एव नियतमेतन्निवासस्थलं विभाव्यते । श्रीमत्कुंदकुंदशिष्या गुणनंदिदेवेंद्रादयोऽपि कर्णाटकप्रांत एव समभूवन्नतोऽपि भगवान् कुंदकुंदः कर्णाटकप्रांतस्य एव विनिश्चीयते

पांगलगोत्रोद्भवश्रीमत्पंडिततात्यानेमिनाथमहोदयैर्विलिखिता काचित्कुंदकुंदाचार्यविषयिणी कथा ज्ञानप्रबोधाभिधभाषाग्रंथाधारतः । तत्र प्रकटीचक्रे श्रीमत्पांगलमहोदयैः कुंदकुंदभगवान् मालवप्रांतांतर्गत वारापुरवास्तव्यः परंतु केवलतत्कथातिरिक्तं वारापुरनिवासित्वे न नियामकं किमप्यनवद्यं गमकं ।

## समयविचारः

समवगम्यते किलेदं नंदिसंघपट्टावलीतो यत् ४९ तमायां वैक्रमशताब्दौ न्यवात्सीद्भगवान् कुंदकुंदो नंदिसंघपट्टे । स च तदात्वे त्रायस्त्रिंशद्वर्षीयः । एवं च मासदशकपूर्वकैकपंचाशद्वर्षाणि संघं संशास्य १०१ तम-संवत्सरसन्निकृष्टे समन्वभूदव्ययसुखं । परंतु विचारनिकषायमाणे विनिर्णीतः किलायं समयकलधौतः सर्वथा कल्पित एव प्रतिभाति ।

जिनवरमहावीरनिर्वाणप्रापणानंतरं समजनिष्ट ६८३ वर्षपर्यंतमंगज्ञानप्रवृत्तिरत्र । अनंतरं च सा तिरोबभूव इति श्रुतावतारग्रंथाधारतः समवगम्यते । इत्थं तद्व्यवस्था—

| | | |
|---|---|---|
| १ | इंद्रभूतिगणधरः (केवली) | १२ वर्षाणि |
| २ | सुधर्माचार्यः | १२ वर्षाणि |
| ३ | जम्बूस्वामी | ३८ वर्षाणि |
| ४ | विष्णुप्रभृतिपंचश्रुतकेवलिनः | १०० वर्षाणि |
| ५ | विशाखदत्तप्रभृतयः-एकदशांगदशपूर्वपाठिनः | १८३ वर्षाणि |
| | नक्षत्रादय एकादशांगपाठिनः | २२० वर्षाणि |
| | सुभद्रादय आचारांगपाठिनः | ११८ वर्षाणि |
| | | ६८३ |

महावीरभगवन्निर्वाणानंतरं ६८३ वर्षपर्यंतं जागर्तिस्मांगप्रवृत्तिरिति-हरिवंशपुराणप्रशस्तावपि लिखितमास्ते । यथा—

त्रयः क्रमात्केवलिनो जिनात्परे द्विषष्टिवर्षांतरभाविनोऽभवन् ।
ततः परे पंच समस्तपूर्विणस्तपोधना वर्षशतांतरे गताः ॥ १ ॥
त्र्यशीतिके वर्षशते तु रूपयुक् दशैव गीता दशपूर्विणः शते ।

---

१ त्रिलोकसारादिग्रंथप्रामाण्यात्सुनिश्चितमेतत् ४७० समवैक्रमसंवत्सरपूर्वं मुमुचे भगवन्महावीरः । अस्मन्निर्दिष्टसमयः श्वेतांबरग्रंथेष्वपि निश्चितः ।

२ पट्टावलीलेखकमतात्—लोहाचार्यानंतरभाविनः—अर्हद्बलि—माघनंदि—भूतबलि—पुष्पदंताचार्या अप्यंगज्ञानिनः समभूवन् किंतु प्रमाणाभावान्न तथात्र ।

३ गुणधरधरसेनान्वयगुर्वोः पूर्वापरक्रमोऽस्माभिः ।
न ज्ञायते तदन्वयकथकागममुनिजनाभावात् ॥ १५१ ॥

श्रुतावतारः ।

द्वये च विंशेंगभृतोऽपि पंच ते शते च साष्टादशके चतुर्मुनिः ॥ २ ॥

आदिपुराणस्य द्वितीयपर्वणि १३९-१५० तमाभ्यां पद्याभ्यां भगवज्जिनसेनाचार्यैरपि मतमिदं पुपुषे। ग्रंथत्रयमपीदं पराचीनतमत्वात्प्रमाणतमं च ततो वीरनिर्वाणानंतरं ६८३ संवत्सरपर्यंतं–अर्थात् २१३ वैक्रमसंवत्सरपर्यंतमचीकमतभारतेंऽगज्ञानप्रवृत्तिरत्र न कापि संशीतिः।

श्रुतावतारावलंबनतः वीरनिर्वाण-६८३-वर्षानंतरं श्रीदत्त-शिवदत्त-अर्हद्दत्ता अगपूर्वाणां कियतां चिदंशानां समभूवन् ज्ञातारः। तदनंतरं समजनि पुण्ड्रवर्धनपत्तने श्रीमदर्हद्वलिः–अंगपूर्वांशदेशज्ञः। ततश्चांगपूर्वांशदेशज्ञो बभूव माघनंदिमुनिः–समाययौ च स स्वर्गे समाधिद्वारेण। तत्पश्चात् कर्मप्राभृतबोधविचक्षणो धरसेनाचार्यः समुत्पेदे। स च भूतबलिपुष्पदंतावध्यापयामास। शिष्यद्वयं चेदं कर्मप्राभृतस्य षट्खंडशास्त्राणि विरचयामास।

गणधर-यतिवृष-उच्चारणाचार्या इति त्रयः सूरयोऽपरेऽपि समुत्पेदिरे। तैश्च क्रमशः कषायप्राभृतगाथा, चूर्णिका, वृत्तिश्च विलिखिताः।

संप्राप च पद्मनंदिमुनिः कर्मकषायप्राभृतसिद्धांतद्वयं गुरुपरिपाटीतः कोण्डकुन्दपुरे। अर्थात् इंद्रनंदिसूरिरचितश्रुतावतारालंबनेन प्रादुरभूद्भगवान् कुंदकुंदः भुतबलि-पुष्पदंत-उच्चारणाचार्यसमनंतरं। परं नाविर्भावितः कदा? तथापि निम्नलिखितपद्यात् सुनिश्चितं समनुमन्यते प्रतिपादिताचार्यमरणानंतरं कियद्वर्षानंतरं प्रत्यपादि भगवान् कुंदकुंदः। अन्यथा गुरुपरिपाटीतः सिद्धांतद्वितयमवाप कुंदकुदप्रभुरिति न प्रतिपादयितुं पार्येत। तच्च पद्यमिदं—

एवं द्विविधो द्रव्यभावपुस्तकगतः समागच्छन्।
गुरुपरिपाट्या ज्ञातः सिद्धांतः कुंडकुंदपुरे ॥ १६० ॥
श्रीपद्मनंदिनेत्यादि............

गरीयानयं परितापः श्रुतावताररचयिता श्रीमदिंद्रनंदी नाजीगणत् गुणधरधरसेनाचार्ययोः पूर्वापरक्रमं यदि स व्यजिज्ञपत् तयोः गुरुपरिपाटीं प्रत्यपादि तदा सुलभतया सुनिश्चितः श्रीमत्कुंदकुंदसमयः। तथा तत्प्रतिपादनानुकंपया नियतमिदं विज्ञायते-अंगपूर्वतदंशयोरवबोधो देशकालदोषतो मंदतमायमानः प्रतिपद्यते स्म। क्रमेण चानेन गुणधरधरसेनाचार्यौ प्रादुरभूतां सर्वतःपश्चात्। यौ च–अग्रायणीपूर्वांतर्गतपंचमवस्तुनश्चतुर्थप्राभृतस्य, ज्ञानप्रवादपूर्वांतर्गतदशमवस्तुनस्तृतीयकषायप्राभृतस्य च ज्ञातारावास्तां।

अयमाशयः—तदेमौ द्वौ विद्वांसौ समजनिषातां यदा समभूत् चरमांगज्ञानी लोहाचार्यः। तदनंतरं समपत्सत च आरातीयचतुर्मुनयः। ततश्च समुत्पेदाते—अर्हद्वलिमाघनंदिनाविति।

श्रीलोहाचार्यस्य मरणकालः २१३ तमवैक्रमशताब्दिसन्निकृष्टः। यदि चरमांगज्ञानिवत् विनयधरादिचतुरारातीयमुनयोऽपि केवलमष्टादशवर्षांतःप्रविष्टा एव समभिमन्येरन्। तदनंतरं अर्हद्वलिमाघनंदिनावपि दशवर्षमध्या द्वादशवर्षमध्या वा संगण्येरन् तत्पश्चात् धरसेन-भूतबलि-पुष्पदंत-गुणधर-यतिवृषभ-उच्चारणाचार्यादीनां सत्त्वे गुरुपरिपाटीतस्तद्ग्रंथानां भगवत्कुंदकुंदपर्यंतसमानयने पंचाशद्वर्षाण्येव वा स्वीक्रियेरन् तदा भवति निश्चितः श्रीकुंदकुंदस्वामिसमयः—वैक्रमतृतीयशताब्देश्चरमपादसान्निध्ये।

समवगच्छंति तावदिदं सकला जनाः समुपपेदे भगवान् कुंदकुंदो नंदिसंघे सातिशयो विश्रुतश्च विद्वान्। पराचीनजैनग्रंथा अप्यत्र प्रमाणं। अर्थात् समुल्लिखितं समवतिष्ठते तेषु, नंदसंघस्थापना समभूत्तत्पुरस्तात्। संघस्थापकश्च समजनि श्रीमदर्हद्वलिः। नंदिसंघगुर्वावलीतश्च समवाबोधीदं, यत्कुंदकुंदभगवान् तृतीयाचार्यो नंदिसंघस्य। अर्थात् समजनिषातां तत्पुरस्तात् माघनंदिजिनचंद्रौ। ततोऽर्हद्वलिमाघनंदिसमनंतरं तु लघीयस्तयावश्यक एव भगवत्कुंदस्थितिसमयः स च संपतिष्यति तृतीयशताब्देरुत्तरार्धकालः।

एकदा भगवत्कुंदकुंददेवैः सह समजनि गरीयान् विवादो रैवतिकमहीधरे श्वेतांबराचार्याणां। कृता च तदा स्वामिभिः पाषाणनिर्मिता सरस्वतीमूर्तिर्वाचालितेति जागर्ति विश्रुतकथा। तत्र प्रमाणं—

पद्मनंदिगुरुर्जातो बलात्कारगणाग्रणीः
पाषाणघटिता येन वादिता श्रीसरस्वती ।

गुर्वावली—

कुंदकुंदगुणी येनोर्जयंतिगिरिमस्तके
सोऽवताद्वादिता ब्राह्मी पाषाणघटिता कलौ ।

शुभचंद्रकृतपांडवपुराणः

प्रमाणेनामुना विनिश्चीयते भगवत्कुंदकुंदस्य पुरस्तादपि जैनधर्मो दिगम्बरश्वेतांबरेतिभागद्वये विभक्त आसीत् । कुंदकुंदविरचितषट्पाहुडग्रंथेऽपि श्वेतांबरसंप्रदायास्तित्वमाभासते । यथा—

णवि सिज्झइ वच्छधरो जिणसासणे जइ वि होइ तिच्छयरो ।
णग्गो विमोक्खमग्गो सेसा उम्मग्गया सव्वे ॥ १ ॥
जइ दंसणेण सुद्धा उत्तामग्गेण सावि संजुत्ता ।
घोरं चरिय चरित्तं इच्छीसु ण पव्विया भणिया ॥ २ ॥

सूत्रपाहुडग्रंथः

निर्णयमिदमत्र दिगंबरसंप्रदाये कदा श्वेतांबरसंप्रदायसमुपपत्तिरभिमता । देवसेनसूरिभिः स्वीयदर्शनसारग्रंथे तु गाथेयं प्रकटिता—

एकसये छत्तीसे विक्कमरायस्स मरणपत्तस्स ।
सोरट्ठे वलहीये उप्पण्णो सेवडो संघो ॥ १ ॥

दर्शनसारे यस्य विक्रमस्य व्यलेखि संवत्सरो भवेदनुमानतः स शकविक्रमः शालिवाहनो वा । जैनग्रंथेषु समस्तीयं शालिवाहनशकसंवत्सरयोर्विक्रमसंवत्सरलेखनपरिपाटी । ततो १३६ तमसंवत्सरो यदि शकीयस्तदा तस्मिन् शकसंवत्सरे, १३५ शतोत्तरपंचत्रिंशद्वर्षसम्मेलनतः २७१ तमे वैक्रमसंवत्सरे निष्पन्ने नियतं श्वेतांबरसमुत्पत्तिस्तत्सान्निध्ये समजनीति निर्विवादनिश्चयः । एवं समनंतरं च श्वेतांबरसमुत्पत्तेः प्रतिपादितश्रुतावतारप्रामाण्यात्सिद्धवत्प्रवदाततया भगवत्कुंदकुंदसमयस्तृतीयशताब्देश्वरमभागे । २१३ तमवैक्रमसंवत्सरात्पूर्वं तु साधयितुमेव नार्हति भगवत्कुंदकुंदोत्पत्तिसमयः ।

श्रीमद्भगवत्कुंदकुंदसमयविषये विद्वद्वरश्रीमत्पंडितके-बी-पाठकमहोदयानां मतमिदं—

कोण्डकोन्दान्वयोदारो गणोऽभूद्भुवनस्तुतः तदैतद्विषयविख्यातं (?) शाल्मलीग्राममावसन् ॥१॥
आसीदतोरणाचार्यस्तपःफलपरिग्रहः । तत्रोपशमसंभूतभावनापास्तकल्मषः ॥ २ ॥
पंडितः पुष्पनंदीति बभूव भुवि विश्रुतः । अंतेवासी मुनेस्तस्य सकलश्चन्द्रमा इव ॥ ३ ॥
प्रतिदिवसभवद्वृद्धिर्निरस्तदोषो व्यपेतहृदयमलः ।
परिभूतचंद्रबिम्बस्तच्छिष्योऽभूत्प्रभाचंद्रः ॥४॥

अमूनि पद्यानि राष्ट्रकूटवंशतृतीयगोविंदमहाराजसमकालीन ७२४ तमशकसंवत्सरस्य ताम्रपट्टे विलिखितानि प्राप्तानि । तस्यैव गोविंदमहाराजस्य समकालीन ७१९ तमशकसंवत्सरस्यापरोऽपि कश्चित्ताम्रपट्टः संप्राप्तस्तत्र च निम्नलिखितानि पद्यानि—

आसीदतोरणाचार्यः कोण्डकुंदान्वयोद्भवः । स चैतद्विषये श्रीमान् शाल्मलीग्राममाश्रितः ॥१॥

---

१ नापि सिध्यति वस्त्रधरो जिनशासने यद्यपि भवति तीर्थंकरः ।
नग्नो विमोक्षमार्गो शेषा उन्मार्गाः सर्वे ॥ १ ॥
यदि दर्शनेन शुद्धा उत्तममार्गेण सापि संयुक्ता ।
घोरं चरति चरित्रं स्त्रीषु न······भणिता ॥ २ ॥
एकशते षट्त्रिंशति विक्रमस्य मरण प्राप्तस्य ।
सौराष्ट्रे वल्लभीके-उत्पन्नः श्वेतांबरसंघः ॥१॥

निराकृततमोऽरातिः स्थापयन् सत्पथे जनान्। स्वतेजोद्योतितक्षोणिश्चंडार्चिरिव यो बभौ ॥२॥

तस्याभूत्पुष्पनंदी तु शिष्यो विद्वान् गणाग्रणीः। तच्छिष्यश्च प्रभाचंद्रस्तस्येयं वसतिः कृता ॥३॥

अमूभिः पद्यैर्नियतं विज्ञायते कुंदकुंदान्वयि (अ) तोरणाचार्यस्य शिष्यः पुष्पनंदी तच्छिष्यश्च प्रभाचंद्रो यदि, १९ तम शकसांवत्सरिकस्तदा तोरणाचार्यः ६०० तमायां शकशताब्दौ सिद्ध्यति। अनया दिशा तेषां कुंदकुदान्वयित्वे भगवत्कुंदकुंदसमयस्तेषां १५० शतोत्तरपंचाशद्वर्षपूर्वं-'अर्थात् ४५० तमे संवत्सरे' सिद्ध्यति।

५०० तमे शकसंवत्सरे शास्ति स्म कश्चित् चालुक्यचक्रवर्ती **कीर्तिवर्ममहाराजः बादामीनगरे वातापीपुरे** वा स च विनाशयामास पराचीनं कदंबवंशं। अर्थात् ५०० तमशकसंवत्सरात्पंचाशद्वर्षपूर्वं (४५० तमशकसंवत्सरसान्निध्ये) प्राचीनकदंबवंशीयः श्रीशिवमृगेशवर्ममहाराजो विधत्तेस्म राज्यमिति निश्चितिः। श्रीशिवकुमारमहाराजप्रतिबोधनार्थं विलिलेख भगवान् कुंदकुंदः स्वीयं ग्रंथमिति समाविर्भावितं च पंचास्तिकायस्य क्रमशः कार्णाटिकसंस्कृतटीकाकारैः **श्रीबालचंद्रजयसेनाचार्यैः**। ततो युक्त्यानयापि भगवत्कुंदकुंदसमयः तस्य शिवमृगेशवर्मसमानकालीनत्वात् ४५० तमशकसंवत्सर एव सिद्ध्यति स्वीकारे चास्मिन् क्षतिरपि नास्ति कापीति।

## ग्रंथरचना

भगवत्कुंदकुंदस्वामिविरचिताः समस्तग्रंथाः प्राकृतभाषायामेवोपलभ्यंते। संस्कृतभाषायामपि स्वामिनिर्मिताः संति ग्रंथा इत्यत्र न किमपि प्रमाणं। तदात्वे जनता संस्कृतभाषापेक्षया कठिनतममपि विषयं प्राकृतभाषायामवबोद्धुं समर्थासीत्। अतः प्रकटयति स्वामिनः प्राकृतप्रेमेदं नासीत्तेषां स्वीयपाण्डित्यप्रकटनाय लक्ष्यं किंतु सर्वजनहितसमीहापूर्णं मनः। इमानि तद्रचितग्रंथरत्नानि—

१ समयसारप्राभृतं २ पंचास्तिकायप्राभृतं ३ प्रवचनसारप्राभृतं ४ षट्प्राभृतं-(दर्शनपाहुड-सुत्तपाहुड-चारित्तपाहुड-बोधपाहुड-भावपाहुड-मोक्खपाहुडेतिषट्पाहुडग्रंथाः) रयणसारः बारहाणुवेक्खा (द्वादशानुप्रेक्षा) नियमसारश्चेति। तत्राद्यं ग्रंथषट्कं तु मुद्रितं। सप्तमो नियमसारः संमुद्रियते संस्कृतटीकालंकृतः स्वोपज्ञभाषाटीकाविभूषितश्च श्रीयुक्तब्रह्मचारिशीतलप्रसादैः।

षट्खंडसिद्धांतस्य प्राथमिकत्रिखंडस्य टीकापि महती भगवत्कुंदकुंदस्वामिभिर्विरचिता। तत्परिमाणं च द्वादशश्लोकसहस्रकं। समुल्लेखः खल्वेतस्याः श्रुतावतारे। परं न समस्ता समुपलभ्यते सांप्रतं। व्यज्ञायीदं भगवत्कुंदकुंदैश्चतुरशीतिशास्त्राणि विरचितानि कियतांचित्तु समुल्लेख उपरिष्टात्कृतः। कियतां च शेषाणामिमानि नामानि समुपलब्धानि—

जोणीसार—क्रियासार—आराहणासार—लब्धिसार—छपणासार—बंधसार—तत्त्वसार—अंगसार—द्रव्यसार—क्रमपाहुड—पयपाहुड—विद्यापाहुड—उघातपाहुड—दृष्टिपाहुड—सिद्धांतपाहुड—तोयपाहुड—चरणपाहुड—समवायपाहुड—नयपाहुड—प्रकृतिपाहुड—चूर्णीपाहुड—पंचवर्गपाहुड—कर्मविपाकपाहुड—वस्तुपाहुड—बुद्धिपाहुड—पयद्धपाहुड—उत्पादपाहुड—दिव्यपाहुड—सिक्खापाहुड—जीवपाहुड—आचारपाहुड—स्थानपाहुड—प्रमाणपाहुड—आलापपाहुड—चूलीपाहुड—षद्दर्शनपाहुड—णोकम्मपाहुड—संठाणपाहुड—नितायपाहुड—एयंतपाहुड—निहयपाहुड—सालमीपाहुडंतिद्विचत्वारिंशद्ग्रंथाः।

कुंदकुंदश्रावकाचारग्रंथस्य भगवत्कुंदकुंद एव रचयितेति पूर्वमासीत्प्रसिद्धिः। किंतु परीक्ष्यमाणे तस्मिन् व्यज्ञायीदं न तन्निर्मितः स परं स्वाभिमतासिद्ध्यर्थं केन चिद्धूर्तेन श्वेतांबरसमाजस्य विवेकविलासनामकग्रंथस्य परावृत्य कानिचित्पद्यानि तन्नामतो विश्रावितः।

भगवत्कुंदकुंदस्य सांप्रतं याः कृतयो दृष्टिपथमवतरंति ताः सरलतमाः सुरसाश्च। ततो विनिर्धार्यते महात्मनस्तस्य, मामकीनाकृतिः सुलभतमा सर्वजनबोधकरा च भवेदिति प्रतिसमयं लक्ष्यमासीत्।

१ विलोम्यत्तामतर्तविबंधादौ एवं द्विविधो द्रव्येत्यादि पद्यद्वयं।

भगवत्करविरचितकृतिषु समयसार-पंचास्तिकाय-प्रवचनसारेति त्रिकृतयः सर्वप्रधानाः। कृतित्रिकमिदं च दिगम्बरसमाजे प्राभृतत्रयनाम्ना च विश्रुतं। अध्यात्मवेदांतविषयः किल जैनधर्मस्य ग्रंथत्रय एवास्मिन् समंजसतया समुपवर्णितः। न काप्यत्युक्तिः स्यात् यदि ग्रंथत्रयमिदं जैनधर्मस्य जीवत्वेन प्राणत्वेन वाभ्युपगतं स्यात्। निश्चयकिलायमास्माकः यावन्न कश्चिदध्येष्यत ग्रंथत्रयमिदं न प्रत्यपत्स्यत स तावज्जैनधर्मज्ञता ततो जैनधर्मज्ञातृत्वमानिभिः तत्तत्महिमानैश्च नियतमभ्यसनीयमेतद्ग्रंथरत्नत्रयं।

## टीकाकारौ।

### श्रीमदमृतचंद्रसूरिः—

नात्र संशीतिः समजनि श्रीमदमृतचंद्रा ग्रंथकारष्टीकाकारश्च। परंतु पावनात्मायं महात्मा कदा? क्व? अनवद्यात्मनीनवैदुष्येण भारतभूमिं विभूषयामासेति निर्णयाय न वरीवरीति समीपेऽस्माकं किमपि सुदृढं गमकं। केचिदामनंति विद्वांसाऽस्य महात्मनो दशमशताब्दिकालं परं तत्र पुष्कलप्रमाणाभावात् न स हि प्रमाणतामास्कंदति। महात्मायं स्वकरकलितग्रंथेषु टीकासु वा स्वनामातिरिक्तमात्मनीनगुर्वादिनामापि न विलिलिख यतो भवेत् सुगमता तत्समयादिविनिर्णयाय। ततो दुरधिगम्य एवास्य विदुषः समयादिविनिर्णयः। पुरुषार्थसिद्ध्युपायः तत्त्वार्थसारः, इति ग्रंथद्वयं स्वातंत्र्येण तन्निर्मितमवातरति दृष्टिपथं सांप्रतं। भगवत्कुंदकुंदस्वामिरचितसमयसार-पंचास्तिकायसार-प्रवचनसारेतिनाटकत्रयस्य टीकाश्च तिस्रः। ताश्च टीका स्वस्वरूपेण भाष्यतामनुकुर्वंति। नात्र संदेहः महात्मायं तात्त्विकतात्पर्यनिर्णायकवचनरचनातः समधवोधयति यत्संप्रापादिमपदमध्यात्मटीकाकृत्सु सः।

विद्यते जैनसमाजे कश्चिदपूर्वः किंत्वपूर्णः पंचाध्यायी ग्रंथः। योऽचिरकालतएव प्रकाशपदवीमुपनीतः यस्य चाध्ययनाध्यापनप्रसारः समजनि न्यायवाचस्पति पंडितप्रवरश्रीगोपालदासपावनजीवनमूलक जैनसिद्धांतमहाविद्यालयधुरंधैनातः। सोऽप्यस्यैव महात्मनः कृतिरिति विनिर्धारितस्तद्रचनाशैलीविलोकनात् विषयप्रतिपादनशैलीदर्शनाच्च। भवितव्यं चानवद्यप्रतिभामृतचंद्रसूरिकल्पेनैव विदुषा तथाविधगभीरकृतिनिर्माणमिति।

### जयसेनाचार्यः

नाम्नानेन किल, समजनिषत नैकविद्वांसो भुवि, तत्र भगवज्जिनसेनाचार्यैरादिपुराणे यः संस्तुतः स प्रथमः। हरिवंशपुराणप्रशस्तौ च यः सिद्धांतशास्त्रज्ञत्वेनोपन्यस्तः स द्वितीयः तृतीयश्च परिवर्तितवर्णिदुलीचंद्रप्रतिष्ठापाठप्रणेता। गवेषणायां सत्यामन्येपि मिलिष्यंति। ततो न निश्चेतुं पार्यते निश्शंकं कतमो जिनसेनाचार्यस्तात्पर्यवृत्तिप्रणेता। प्रवचनसारपंचास्तिकायसारप्रशस्तौ परिचाययति महात्मायमित्थं—

अज्ञानतमसा लिप्तो मार्गो रत्नत्रयात्मकः। तत्प्रकाशसमर्थाय नमोऽस्तु कुमुदेंदवे॥ १॥

सूरिः श्रीवीरसेनाख्यो मूलसंघेऽपि सत्तपाः। नैर्ग्रंथ्यपदवीं भेजे जातरूपधरोऽपि यः॥ २॥

ततः श्रीसोमसेनोऽभूत्-गुणी गुणगणाश्रयः। तद्विनेयोऽस्ति यस्तस्मै जयसेनतपोभृते (?)॥३॥

इतिपद्यत्रयाद्विज्ञायते वीरसेनशिष्यः सोमसेनस्तच्छिष्यो जयसेनः स च मुनिमूलसंघीयः। अपरश्चैको जयसेनः स्वनिर्मितवसुविंदुप्रतिष्ठापाठे परिचाययतीत्थं—

कुंदकुंदाग्रशिष्येण जयसेनेन निर्मितः। पाठोऽयं सुधियां सम्यग् कर्तव्यायास्तु योगतः॥१॥

श्रीदक्षिणे कुंकुणनाम्निदेशे सह्याद्रिणा संगतसीम्नि पूते। श्रीरत्नभूध्रोपरिदीर्घचैत्यं लालाटराज्ञा विधिनोर्जितं यत्॥२॥
तस्यार्थमुद्दिश्य गुरोरनुज्ञामादाय कोल्हापुरवासिहर्षात् दिनद्वये स लिखितः प्रातज्ञापूर्त्यर्थमेवं श्रुतसंविधत्तिः॥३॥

वसुविंदुरिति प्राहुस्तदादि गुरवो यतः। जयसेनापराख्यां तन्नमोऽस्तु हितर्पिणां॥४॥

प्रथमश्लोकस्थ "कुंदकुंदाग्रशिष्येणेति विशेषणेनानुमीयते यत् तात्पर्यवृत्तिकर्त्रानेनैव जयसेनेन भाव्यं। परं कदा क्व समभूदयं मुनिराडिति विनिश्चित्यै नास्ति किमपि निष्कल्मपं गमकं। मुनिनानेन स्वनिर्मिततात्पर्यवृत्तौ कियत्सुचित्पद्येषु श्रीमदमृतचंदसूरिटीका वर्णतः समनुकृता शब्दैः परावृत्त्य तात्पर्यमपि यत्र कुत्रचिदमृतचंद्रसूरिनिर्दिष्टमेव समुद्योपितं ततः समजन्ययं महात्मा श्रीमदमृत चंद्रसूरितःपश्चादिति नियतं विभाव्यते।

निवेदयिता—गजाधरलालः

# श्रीसमयप्राभृतस्य शुद्ध्यशुद्धिपत्रम् ।

| अशुद्धिः | शुद्धिः | पृ. | पंक्तिः |
|---|---|---|---|
| अचलां | अमलां | १ | ३ |
| प्राप्तां | प्राप्तान् | १ | ३ |
| समयप्राभृतमिदं | समयप्राभृतमहो | १ | ४ |
| सबंधमिधेयेति | संबंधाभिधेयेति | २ | ६ |
| णाणह्विदेति | णाणह्विदेति | ,, | २६ |
| नारकेति | नरनारकेति | ,, | ३७ |
| वर्तत | वर्तते | ३ | १३ |
| अनुगृह्वतो | अनुगृह्वंतो | ,, | ३१ |
| अथ एवैतस्य | अत एवैतस्य | ४ | २१ |
| स्खलितं | च्यवेयं | ,, | २५ |
| चारित्रवस्वेन | चारित्रवत्त्वेन | ५ | १७ |
| गतं । | गतं ॥ १२ ॥ | ७ | ३१ |
| शेषकाले ॥ १२ ॥ | शेषकाले । | ,, | ३३ |
| अतयोः | अनयोः | ,, | ३६ |
| कार्तस्वर्णेति | कार्तस्वरेति | ८ | ३२ |
| शुभोपयोग | शुभोपयोगे | ,, | ३६ |
| हेयोपादेयतत्वं | हेयोपादेयतत्त्वं | ९ | ३ |
| परमादितत्त्वेति | परमात्मादितत्त्वेति | १० | ४ |
| अबंधस्पृष्टं | अबंधस्पृष्टं | ,, | २२ |
| पर्यायमुख्यतया | पर्यायं मुख्यतया | ११ | ७ |
| वियाणीहि | वियाणाहि | ,, | १८ |
| भावार्थे | भावार्थः | ,, | २७ |
| अपदेश शब्दाः | अपदेशः शब्दाः | १२ | २६ |
| स्वरूपमेव | स्वरूप एव | ,, | ३० |
| सम्यग्ज्ञनादिकं | सम्यग्ज्ञानादिकं | ,, | ३३ |
| अबुद्धाना | अबुद्धानां | १३ | १ |
| व्यच्छेदेन | व्यवच्छेदेन | ,, | ६ |
| वस्त्वत्तरं | वस्त्वंतरं | ,, | ३५ |
| सो एव | सोचेव | १४ | १९ |
| पुरुर्षः | पुरुषः | १४ | ३५ |
| अहमेतदेतद- हमेतस्यास्मि | अहमेतदेवदह- महमेतस्यास्मि | १६ | २२ |
| पूर्वमेतदेतत् | पूर्वमेतत् | ,, | २४ |
| अहमिदंच | अहमिदं चापि | ,, | २४ |
| दव्यं | दव्वं | १८ | ४ |
| देहाद्भिंन्न | देहाद्भिन्नं | ,, | ५ |
| सव्वहुणाणदिठ्ठो | सव्वहुणाणदिठ्ठो | ,, | ७ |
| ववहारणयो | ववहारणओ | १९ | १५ |
| तन्निश्चयेन | तान्निश्चये | २० | ९ |
| निश्चयस्तुतिप- रिहारं | निश्चयस्तुति- रिति परिहारं | ,, | १९ |
| सुखादिमत्त्राभावात | सुखादिमत्त्वाभावात् | ,, | ३३ |
| तृतीता | तृतीया | २२ | १७ |
| गाथाचतुष्ट्ये निश्चये | गाथाचतुष्टये | ,, | १८ |
| प्रतिबुरद्धः । | प्रतिबुद्धः | २३ | २ |
| प्रतिपत्या | प्रतिपत्त्या | ,, | ३० |
| शुद्धात्मस्वरूपस्व | शुद्धात्मस्वरूपस्य | २४ | १३ |
| इति | इति । | ,, | १४ |
| लोमेति | लोभेति | ,, | १५ |
| दर्शनोपपयोग | दर्शनोपयोगः | ,, | २३ |
| किंचिव | किंचिवि | २५ | १८ |
| किंचिदप्यन्यत् | किंचिदप्यन्यत् | ,, | २० |
| त्रिशतगाथापर्यंतं | त्रिंशद्गाथापर्यंतं | २६ | १० |
| पार्षदान् | पार्श्वदान् | ,, | १७ |
| कर्मणोकर्मेति | कर्मनोकर्मेति | २७ | १० |
| कर्माणभागं | कर्मानुभागं | ,, | १२ |
| संयोगेणापि | संयोगेनापि | ,, | १६ |
| इतेरे | इतरे | ,, | ३२ |
| श्यामिकायाअ- तिरिक्तेति | श्यामिकायाति- रिक्तेति | २८ | १९ |
| नवपुराणवस्थादि | नवपुराणावस्थादि | ,, | २३ |
| चित्त्वावस्य | चित्स्वभावस्य | ,, | २७ |
| विदंति | विंदंति | ,, | ३६ |

| अशुद्धिः | शुद्धिः | पृ. | पंक्तिः |
|---|---|---|---|
| जिणं | जिणा | २९ | १ |
| यदध्यवसानादयः | यदध्यवसानादय | ,, | ११ |
| एव | एष | ३० | ६ |
| द्रव्यद्गुणेभ्य | द्रव्यगुणेभ्यः | ३१ | १६ |
| अज्झप्पट्ठाण | अज्झप्पट्ठा | ३२ | ७ |
| संति | नसंति | ३३ | ३ |
| असंणि | असण्णि | ,, | १४ |
| तत्रांतरे | तत्रांतरे | ३४ | २४ |
| दष्टा | दृष्ट्वा | ३५ | २६ |
| भव | भवे | ३६ | २९ |
| प्राताः | प्राप्तः | ३७ | ३५ |
| जीवोः | जीवाः | ३८ | १८ |
| जीवण | जावण | ४० | ३५ |
| द्वत्तं | निवृत्तं | ४२ | २७ |
| सफलात्वात् | सफलत्वात् | ४३ | २३ |
| अज्ञानीसज्ञानी | अज्ञानिसज्ञानि | | |
| जीवेति | जीवंति | ४४ | ६ |
| सज्ञानीजीवेति | सज्ञान | ४५ | २३ |
| ज्ञानी | ज्ञानि | ४४ | ३४ |
| उक्षते | उक्ष्यते | ४४ | ३५ |
| पर्याये | पर्यायैः | ४७ | ३५ |
| कर्तृकर्मभावं | कर्तृकर्मभाव | ४८ | ८ |
| जीवनि | जीवस्य | ४९ | ८ |
| परमप्पाणंकुव्वी | परमप्पाणमकुव्वी | ५० | १७ |
| स | तद्य | ५० | ३५ |
| दृढयति | दृढयंति | ५१ | ६ |
| परिणमत्कर्मणां | परिणमन्कर्मणां | | |
| करेदिधम्मदि | करेदि धम्मादि | ५६ | ३२ |
| नो इंद्रीति | नो इंद्रियेति | | |
| स्वात्मा | स्वेवं | ५९ | १९ |
| यादीति | यीदति | ६० | ३५ |
| करोत्यात्मनः | करोत्यात्मा | ६१ | १८ |
| संक्रमलेयसोऽपि | सक्रमलेय | ६२ | ३ |
| तंनिरंतरं | तन्निरंतरं | ६२ | २१ |
| तथा | यथा | ६८ | २८ |
| गाथाष्टकं | गाथाष्टकं | ७० | ११ |
| एवंमशुद्धेति | एवं शुद्धेति | ७० | १८ |
| सप्तगदार्थानां | सप्तपदार्थानां ! | ७० | २८ |
| ज्ञानीजीवस्वरूपं | ज्ञानिजीवस्वरूपं | ७१ | २ |
| भुंइता | मुइत्ता | ७१ | ११ |
| मय्यगं | मप्पगं | ७२ | १ |
| ज्ञानमयोऽज्ञानेति | ज्ञानमयाज्ञानेति | ७२ | १३ |
| कर्मणः | भावस्य | ७२ | १६ |
| परिणतत्वाजानिनः | परिणतत्वाज्ञानिनः | ७२ | २१ |
| ज्ञानमयोः | ज्ञानमयो | ७२ | ३१ |
| वहुभयेति | वहुभावंति | ७३ | ३ |
| भावा | ज्ञावात् | ७३ | २३ |
| ज्ञानमयः | ज्ञानमय | ,, | २४ |
| समयसारे | समयसार | ८० | २७ |
| पुण्यामेवेकां, तेन | पुण्यामेवैकांतेन | ८६ | २८ |
| सर्वोऽपि | स सर्वोऽपि | ८८ | १९ |
| न | तदा न | ९१ | ३१ |
| विधायतो | विभावयतो | ९२ | २५ |
| दष्टा | दृष्ट्वा | ९५ | १२ |
| दिठ्ठं | दिट्ठं | ९५ | १० |
| किं भूयात | किं भूयात् ? | ,, | २५ |
| प्रत्यया कारणं | प्रत्ययाः कारणं | ९७ | २९ |
| उपयोग प्रयोग्य | उपयोगप्रायोग्यं | १०२ | ३१ |
| वघ्नति | वध्नंति | १०३ | ७ |
| शुद्धोत्मोपादेयत्वे | शुद्धात्मोपादेयत्वे | १०४ | २२ |
| वघ्नंतिः | वध्नंति | १०५ | ११ |
| वध्येत | वध्यते | १०७ | २७ |
| मत्ज्ञसहावा | मज्झसहावा | ११० | २९ |
| वद्यवेदकभावौ | वेद्यवेदकभावौ | ११२ | १२ |
| अपरिग्रहा | अपरिग्गह | ११८ | ५ |
| लाहं | कोहं | १२० | १० |
| मूलं | मूलं । | १२० | २६ |
| मूचं | मूत्रं | ,, | २६ |
| ज्ञाम्यपि | ज्ञान्यपि | १२१ | ३१ |
| समादिट्ठी | सम्मादिट्ठी | १२४ | ५ |
| एंवं | एवं | १३० | १८ |
| आउंन | आवंण | १३१ | ७ |
| हवंदि | हवंति | १३३ | २९ |
| वद्यं | वाद्यं | १३७ | ३२ |
| दुक्खिदेति | दुक्खिदेति | १३८ | १ |

| अशुद्धिः | शुद्धिः | पृ. | पंक्तिः |
|---|---|---|---|
| पापादयेन | पापोदयेन | १३९ | १३ |
| सक्रः | शक्रः | १४१ | २१ |
| आधाकमाद्याः | आधाकर्माद्याः | १४५ | २ |
| शद्वेन | शब्देन | १४७ | २५ |
| वाणिदो | वणिजदो | १४८ | २२ |
| निमित्तत्वापत्तो | निमित्तत्वापत्तौ | १४९ | २० |
| पुग्गालदव्वस्स | पुग्गलदव्वस्स | ,, | २६ |
| तत्पर्यवृत्तिः | तात्पर्यवृत्तिः | १५१ | ५ |
| सर्विकल्पमच | सविकल्पमत्र | १५२ | १० |
| सद्भावेऽपि | सद्भावेऽपि | ,, | १४ |
| पूर्व | पूर्वे | १५२ | २१ |
| किमययेव | किमयमेव | १५२ | २२ |
| यथ | यथा | १५४ | १६ |
| सर्वेविशुद्ध | सर्वविशुद्धः | १५६ | १४ |
| नातिक्रायति | नातिक्रामति | १५६ | १६ |
| भवति | भ्रमति | १५७ | १७ |
| बध्येऽह | वध्येहं | ,, | १९ |
| कन | केन | ,, | ३१ |
| समादौ | समाधौ | १५८ | १५ |
| परिहारणं | परिहरणं | १५९ | ८ |
| शुरूपेति | रूपेति | १५९ | २४ |
| नोर्ध्वमूर्ध्वे | नोर्ध्वमूर्ध्वं | १६० | २३ |

| अशुद्धिः | शुद्धिः | पृ. | पंक्तिः |
|---|---|---|---|
| स्वीकीयगुणैः | स्वकीयगुणैः | १६१ | २४ |
| कम्मफलं | कम्मफलं | १६३ | ३३ |
| भोक्तृत्वभावं | भोक्तृत्वभावं | १६५ | ३० |
| सहारंरूपेण | संहाररूपेण | १६६ | १४ |
| दोह्नं | दोह्नं | १६९ | १७ |
| विपयातरे | विपयांतरे | १७१ | ३१ |
| तेपामाक्षेव कृतः | तासामाक्षेपः कृतः | १७१ | ३२ |
| स्त्रीवेदाख्य | स्त्रीवेदाख्यं | १७६ | २९ |
| चेम | चेत् | १७६ | ३५ |
| संख्योपदेशं | साख्योपदेशं | ,, | ३७ |
| रागादि | रागादी | १७९ | १२ |
| थथा | यथा | १८४ | १७ |
| तत्त्वार्थश्रद्धानेति | तत्वार्थश्रद्धानेति | १८५ | १७ |
| व्यख्यानमुख्यत्वेन | व्याख्यानमुख्यत्वेन | ,, | २८ |
| पर्यायपु | पर्यायेपु | १८६ | ३ |
| स्वम्यंशो | स्वाम्यंशो | १८७ | ५ |
| अपात्र । | अथात्र | १९३ | ३८ |
| शमर्मयत्वं | शर्ममयत्वं | २०१ | २९ |
| पट्संयोगेन | पट्संयोगेन | २०३ | ७ |
| जानानि | जानाति | २०४ | ९ |
| संसारणां | संसारिणां | | |
| सुष्ठो | सुष्ठु | २१६ | ३९ |



# श्रीसमयप्राभृतस्य विषयानुक्रमणिका ।

## जीवाजीवाधिकारः

### प्रथमरंगः


इति विषयानुक्रमणिका समाप्ता ।




इति प्रकरणसूची समाप्ता



नमः सिद्धेभ्यः ।

# सनातनजैनग्रंथमाला ।

## ३.

श्रीमद्भगवत्कुंदकुंदाचार्यविरचितं

# समयप्राभृतं ।

मंगलाचरणं ।

**वंदित्तु सव्वसिद्धे धुवममलमणोवमं गदिं पत्ते**
**वोच्छामि समयपाहुडमिणमो सुदकेवलीभणिदं ॥ १ ॥**

वंदित्वा सर्वसिद्धान् ध्रुवामचलामनौपम्यां गतिं प्राप्तां ।
वक्ष्यामि समयप्राभृतमिदं श्रुतकेवलिभणितं ॥ १ ॥

## तात्पर्यवृत्तिः ।

वीतरागं जिनं नत्वा ज्ञानानंदैकसंपदं ।
वक्ष्ये समयसारस्य वृत्तिं तात्पर्यसंज्ञिकां ॥ १ ॥

अथ शुद्धपरमात्मतत्त्वप्रतिपादनमुख्यत्वेन विस्तररुचिशिष्यप्रतिबोधनार्थं श्रीकुंदकुंदाचार्यदेवनिर्मिते समयसारप्राभृतग्रंथे अधिकारशुद्धिपूर्वकत्वेन पातनिकासहितव्याख्यानं क्रियते। तत्रादौ **वंदित्तु सव्वसिद्धे** इति नमस्कारगाथामादिं कृत्वा सूत्रपाठक्रमेण प्रथमस्थले स्वतंत्रगाथाषट्कं भवति । तदनंतरं द्वितीयस्थले भेदाभेदरत्नत्रयप्रतिपादनरूपेण **ववहारेणुवदिस्सदि** इत्यादिगाथाद्वयं । अथ तृतीयस्थले निश्चयव्यवहारश्रुतकेवलिव्याख्यानमुख्यत्वेन **जो हि सुदेण** इत्यादिसूत्रद्वयं । अतः परं चतुर्थस्थले भेदाभेदरत्नत्रयभावनार्थं तथैव भावनाफलप्रतिपादनार्थं च **णाणह्मि भावणा** इत्यादिसूत्रद्वयं । तदनंतरं पंचमस्थले निश्चयव्यवहारनयद्वयव्याख्यानरूपेण **ववहारो भूदत्थो** इत्यादिसूत्रद्वयं । एवं चतुर्दशगाथाभिः स्थलपंचकेन समयसारपीठिकाव्याख्याने समुदायपातनिका । तद्यथा—अथ प्रथमतस्तावद्गाथायाः पूर्वार्द्धेन मंगलार्थमिष्टदेवतानमस्कारमुत्तरार्द्धेन तु समयसारग्रंथव्याख्यानं करोमीत्यभिप्रायं मनसि धृत्वा सूत्रमिदं प्रतिपादयति ।

**वंदित्तु** इत्यादि । पदखंडनारूपेण व्याख्यानं क्रियते । **वंदित्तु** निश्चयनयेन स्वस्मिन्नेवाराध्याराधकभावरूपेण निर्विकल्पसमाधिलक्षणेन भावनमस्कारेण, व्यवहारेण तु वचनात्मकद्रव्यनमस्कारेण वंदित्वा कान् **सव्वसिद्धे** स्वात्मोपलब्धिसिद्धिलक्षणसर्वसिद्धान् । किं विशिष्टान् **पत्ते** प्राप्तान् कां **गदिं** सिद्धगतिं सिद्धपरिणतिं । कथंभूतां **धुवं** टंकोत्कीर्णज्ञायकैकस्वभावत्वेन ध्रुवामविनश्वरां । **अमलं** भावकर्मद्रव्यकर्मनोकर्ममलरहितत्वेन शुद्धस्वभावसहितत्वेन च निर्मलां । अथवा **अचलं** इति पाठांतरे द्रव्यक्षेत्रादिपंचप्रकारसंसारभ्रमणरहितत्वेन स्वस्वरूपनिश्चलत्वेन च चलनरहितामचलां । **अणोवमं** निखिलोपमारहितत्वेन निरुपमां

स्वभावसहितत्वेन अनुपमां। एवं पूर्वार्द्धेन नमस्कारं कृत्वा परार्द्धेन संबंधाभिधेयप्रयोजनसूचनार्थं प्रतिज्ञां करोति। वक्ष्यामि किं **समयपाहुडं** समयप्राभृतं सम्यक् अयः बोधो यस्य स भवति समय आत्मा। अथवा समं एकीभावेनायनं गमनं समयः। प्राभृतं सारं सारशुद्धावस्था। समयस्यात्मनः प्राभृतं समयप्राभृतं। अथवा समयएव प्राभृतं समयप्राभृतं। इणं इदं प्रत्यक्षीभूतं ओ अहो भव्याः कथंभूतं **सुदकेवलीभणिदं** प्राकृतलक्षणबलात्केवलीशब्ददीर्घत्वं। श्रुते परमागमे केवलिभिः सर्वज्ञैर्भणितं श्रुतकेवलिभणितं। अथवा श्रुतकेवलिभणितं गणधरदेवकथितमिति। संबंधाभिधेयप्रयोजनानि कथ्यंते। व्याख्यानं वृत्तिग्रंथः व्याख्येयं व्याख्यानतत्प्रतिपादकसूत्रमिति। तयोस्संबंधो व्याख्यानव्याख्येयसंबंधः। सूत्रमभिधानं सूत्रार्थोभिधेयः तयोः संबंधोऽभिधानाभिधेयसंबंधः। निर्विकारस्वसंवेदनज्ञानेन शुद्धात्मपरिज्ञानं प्राप्तिर्वा प्रयोजनमित्यभिप्रायः॥१॥ अथ गाथापूर्वार्द्धेन स्वसमयमपरार्द्धेन परसमयं च कथयामीत्यभिप्रायं मनसि संप्रधार्य सूत्रमिदं निरूपयति—

## आत्मख्यातिः।

नमः समयसाराय स्वानुभूत्या चकासते।
चित्स्वभावाय भावाय सर्वभावांतरच्छिदे॥ १॥
अनंतधर्मणस्तत्त्वं पश्यंती प्रत्यगात्मनः।
अनेकांतमयी मूर्तिर्नित्यमेव प्रकाशतां॥ २॥
-परपरिणतिहेतोर्मोहनाम्नोऽनुभावा-
दविरतमनुभाव्यव्याप्तिकल्माषितायाः।
मम परमविशुद्धिः शुद्धचिन्मात्रमूर्ते-
र्भवतु समयसारव्याख्ययैवानुभूतेः॥ ३॥

अथ सूत्रावतारः वंदित्तु इत्यादि—

अथ प्रथमत एव स्वभावभावभूततया ध्रुवत्वमवलंबमानामनादिभावांतरपरपरिवृत्तिविश्रांतिवशेनाचलत्वमुपगतामखिलोपमानविलक्षणाद्भुतमाहात्म्यत्वेनाविद्यमानौपम्यामपवर्गसंज्ञिकां गतिमापन्नान् भगवतः सर्वसिद्धान् सिद्धत्वेन साध्यस्यात्मनः प्रतिच्छंदस्थानीयान् भावद्रव्यस्तवाभ्यां स्वात्मनि परात्मनि च निधायानादिनिधनश्रुतप्रकाशितत्वेन निखिलार्थसार्थसाक्षात्कारिश्रुतकेवलिप्रणीतत्वेन श्रुतकेवलिभिः स्वयमनुभवद्भिरभिहितत्वेन च प्रमाणतामुपगतस्यास्य समयप्रकाशकस्य प्राभृताह्वयस्यार्हत्प्रवचनावयस्य स्वपरयोरनादिमोहप्रहाणाय भाववाचा द्रव्यवाचा च परिभाषणमुपक्रम्यते॥१॥ तत्र तावत्समयएवाभिधीयते—

**जीवो चरित्तदंसणणाणट्ठिद तं हि ससमयं जाण।**
**पुग्गलकम्मुवदेसट्ठिदं च तं जाण परसमयं॥ २॥**
जीवश्चारित्रदर्शनज्ञानस्थितस्तं हि स्वसमयं जानीहि।
पुद्गलकर्मप्रदेशस्थितं च तं जानीहि परसमयं॥ २॥

**तात्पर्यवृत्तिः**—**जीवो चरित्त** इत्यादि—**जीवो** शुद्धनिश्चयेन शुद्धबुद्धैकस्वभावनिश्चयप्राणेन तथैवाशुद्धनिश्चयेन क्षायोपशमिकाशुद्धभावप्राणैरसद्भूतव्यवहारेण यथासंभवद्रव्यप्राणैश्च जीवति जीविष्यति जीवितपूर्वो वा जीवः। **चरित्तदंसणणाणट्ठिद तं हि ससमयं जाण** स च जीवश्चारित्रदर्शनज्ञानस्थितो यदा भवति तदा काले तमेव जीवं हि स्फुटं स्वसमयं जानीहि। तथा हि—विशुद्धज्ञानदर्शनस्वभावनिज परमात्मनि यद्रुचिरूपं सम्यग्दर्शनं तत्रैव रागादिरहितस्वसंवेदनं ज्ञानं तथैव निश्चलानुभूतिरूपं वीतराग चारित्रमित्युक्तलक्षणेन निश्चयरत्नत्रयेण परिणतजीवपदार्थं हे शिष्य स्वसमयं जानीहि। **पुग्गलकम्मुवदेसट्ठिदं च तं जाण परसमयं** पुद्गलकर्मोपदेशस्थितं च तमेव जानीहि परसमयं। तद्यथा—पुद्गलकर्मोदयेन जनिता ये नारकाद्युपदेशव्यपदेशाः संज्ञाः पूर्वोक्तनिश्चयरत्नत्रयाभावात्तत्र यदा स्थितो भवत्ययं जीवस्तदा तं जीवं परसमयं

जानीहीति स्वसमयपरसमयलक्षणं ज्ञातव्यं ॥२॥ अथ स्वगुणैकत्वनिश्चयगतशुद्धात्मैवोपादेयः कर्मबंधेन सहैकत्वगतो हेय इति। अथवा स्वसमय एव शुद्धात्मनः स्वरूपं न पुनः परसमयं इत्यभिप्रायं मनसि धृत्वा। अथवास्य सूत्रस्यानंतरं सूत्रमिदमुचितं भवतीति निश्चत्य विवक्षितसूत्रं प्रतिपादयतीति पातनिकालक्षणं सर्वत्र ज्ञातव्यं ।

आत्मख्यातिः — योयं नित्यमेव परिणामात्मनि स्वभावे अवतिष्ठमानत्वात् उत्पादव्ययध्रौव्यैक्यानुभूतिलक्षणया सत्तयानुस्यूतश्चैतन्यस्वरूपत्वान्नित्योदितविशददृशिज्ञप्तिज्योतिरनंतधर्माधिरूढैकधर्मित्वादुद्योतमानद्रव्यत्वः क्रमाक्रमप्रवृत्तविचित्रभावस्वभावत्वादुत्संगितगुणपर्यायः स्वपराकारावभासनसमर्थत्वादुपात्तवैश्वरूप्यैकरूपः प्रतिविशिष्टावगाहगतिस्थितिवर्त्तनानिमित्तरूपत्वाभावादसाधारणचिद्रूपतास्वभावसद्भावाच्चाकाशधर्माधर्मकालपुद्गलेभ्यो भिन्नोऽत्यंतमनंतद्रव्यसंकरेपि स्वरूपादप्रच्यवनात् टंकोत्कीर्णचित्स्वभावो जीवो नाम पदार्थः स समयः। समयत एकत्वेन युगपज्जानाति गच्छति चेति निरुक्तेः। अयं खलु यदा सकलस्वभावभासनसमर्थविद्यासमुत्पादकविवेकज्योतिरुद्गमनात्समस्तपरद्रव्यात्प्रच्युत्य दृशिज्ञप्तिस्वभावनियतवृत्तिरूपात्मतत्त्वैकत्वगतत्वेन वर्त्तते तदा दर्शनज्ञानचारित्रस्थितत्वात्स्वमेकत्वेन युगपज्जानन् गच्छंश्च स्वसमय इति। यदा त्वनाद्यविद्याकंदलीमूलकंदायमानमोहानुवृत्तितया दृशि ज्ञप्तिस्वभावनियतवृत्तिरूपादात्मतत्त्वात्प्रच्युत्य परद्रव्यप्रत्ययमोहरागद्वेषादिभावैकगतत्वेन वर्त्तते तदा पुद्गलकर्मप्रदेशस्थितत्वात्परमेकत्वेन युगपज्जानन् गच्छंश्च परसमय इति प्रतीयते। एवं किल समयस्य द्वैविध्यमुद्धावति ॥२॥ अथैतद्बाध्यते—

**एयत्तणिच्छयगदो समओ सव्वत्थ सुंदरो लोगे ।**
**बंधकहाएयत्ते तेण विसंवादिणी होदि ॥३॥**

**एकत्वनिश्चयगतः समयः सर्वत्र सुंदरो लोके ।**
**बंधकथैकत्वे तेन विसंवादिनी भवति ॥३॥**

तात्पर्यवृत्तिः—**एयत्तणिच्छयगदो** स्वकीयशुद्धगुणपर्यायपरिणतः, अभेदरत्नत्रयपरिणतो वा एकत्वनिश्चयगतः **समओ** समयशब्देनात्मा, कस्माद्धेतोः सम्यगयते गच्छति परिणमति कान् स्वकीयगुणपर्यायानिति व्युत्पत्तेः। **सव्वत्थसुंदरो** सर्वत्र समीचीनः क्व **लोगे** लोके अथवा सर्वत्रैकेंद्रियाद्यवस्थासु शुद्धनिश्चयनयेन सुंदर उपादेय इति। **बंधकहा** कर्मबंधजनितगुणस्थानादिपर्यायाः। **एयत्ते** एकत्वे तन्मयत्वे या बंधकथा प्रवर्तते **तेण** तेन पूर्वोक्तजीवपदार्थेन सह सा **विसंवादिणी** विसंवादिनो कोर्थः विसंवादिणी विसंवादिनीकथा प्राकृतलक्षणवलात् पुल्लिंगे स्त्रीलिंगनिर्देशः[1]। विसंवादिनी असत्या **होदि** भवति। शुद्धनिश्चयनयेन शुद्धजीवस्वरूपं न भवतीत्यर्थः। ततः स्थितं स्वसमयएवात्मनः स्वरूपमिति ॥३॥ अथैकत्वपरिणतं शुद्धात्मस्वरूपं सुलभं न भवतीत्याख्याति—

आत्मख्यातिः—समयशब्देनात्र सामान्येन सर्वएवार्थोऽभिधीयते। समयत एकीभावेन स्वगुणपर्यायान्गच्छतीति निरुक्तेः। ततः सर्वत्रापि धर्माधर्माकाशकालपुद्गलजीवद्रव्यात्मनि लोके ये यावंतः केऽप्यर्थास्ते सर्वएव स्वकीयद्रव्यांतर्मग्नानंतस्वधर्मचक्रचुंबिनोपि परस्परमचुंबंतोत्यंतप्रत्यासत्तावपि नित्यमेव स्वरूपादपतंतः पररूपेणापरिणमनादविनष्टानंतव्यक्तित्वाट्टंकोत्कीर्ण इव तिष्ठंतः समस्तविरुद्धाविरुद्धकार्यहेतुतया शश्वदेव विश्वमनुगृह्णंतो नियतमेकत्वनिश्चयगतत्वेनैव सौंदर्यमापद्यंते। प्रकारांतरेण सर्वसंकरादिदोषापत्तेः। एवमेकत्वे सर्वार्थानां प्रतिष्ठिते सति जीवाह्वयस्य समयस्य बंधकथाया एव विसंवादत्वापत्तिः। कुतस्तन्मूलपुद्गलकर्मप्रदेशस्थितत्वमूलपरसमयोत्पादितमेतस्य द्वैविध्यं। अतः समयस्यैकत्वमेवावतिष्ठते ॥ ३ ॥ तथैतदसुलभत्वेन विभाव्यते—

---

1 एतन्मते 'विसंवादिणो' पुल्लिंग एव पाठः।

**सुदपरिचिदाणुभूदा सव्वस्स वि कामभोगबंधकहा ।**
**एयत्तस्सुवलंभो णवरि ण सुलभो विभत्तस्स ॥४॥**

श्रुतपरिचितानुभूता सर्वस्यापि कामभोगबंधकथा ।
एकत्वस्योपलंभः केवलं न सुलभो विभक्तस्य ॥४॥

तात्पर्यवृत्तिः–**सुदपरिचिदाणुभूदा** इत्यादि । **सुदा** श्रुता अनंतशो भवति । **परिचिदा** परिचिता सपूर्वानंतशो भवति । **अणुभूदा** अनुभूतानंतशो भवति कस्य **सव्वस्सवि** सर्वस्यापि जीवलोकस्य । कासौ **कामभोगबंधकहा** कामरूपभोगाः कामभोगाः अथवा कामशब्देन स्पर्शनरसनेंद्रियं भोगशब्देन घ्राणचक्षुःश्रोत्रत्रयं तेषां कामभोगानां बंधः संबंधस्तस्य कथा । अथवा बंधशब्देन प्रकृतिस्थित्यनुभागप्रदेशबंधस्तत्फलं च नरनारकादिरूपं भण्यते । कामभोगबंधानां कथा कामभोगबंधकथा यतः पूर्वोक्तप्रकारेण श्रुतपरिचितानुभूता भवति ततो न दुर्लभा किंतु सुलभैव । **एयत्तस्स** एकत्वस्य सम्यग्दर्शनज्ञानचारित्रैक्यपरिणतिरूपनिर्विकल्पसमाधिबलेन स्वसंवेद्यशुद्धात्मस्वरूपस्य तस्यैकत्वस्य **उवलंभो** उपलंभः प्राप्तिर्लाभ **णवरि** केवलं अथवा नवरि किंतु **ण सुलभो** नैव सुलभः कथंभूतस्यैकत्वस्य **विभत्तस्स** विभक्तस्य रागादिरहितस्य । कथं न सुलभ इति चेत् श्रुतपरिचितानुभूतत्वाभावादिति ॥ ४ ॥ अथ यस्मादेकत्वं सुलभं न भवति तस्मात्तदेव कथ्यते–

आत्मख्यातिः–इह सकलस्यापि जीवलोकस्य संसारचक्रक्रोडाधिरोपितस्याश्रांतमनंतद्रव्यक्षेत्रकालभवभावपरावर्त्तैः समुपक्रांतभ्रांतेरेकत्रीकृतविश्वतया महता मोहग्रहेण गोरिव वाह्यमानस्य प्रसभोज्जृंभिततृष्णातंकत्वेन व्यक्तांतराधेरुत्तम्योत्तम्य मृगतृष्णायमानं विषयग्राममुपरुंधानस्य परस्परमाचार्यत्वमाचरतोऽनंतशः श्रुतपूर्वानंतशः परिचितपूर्वाऽनंतशोऽनुभूतपूर्वा चैकत्वविरुद्धत्वेनात्यंतविसंवादिन्यपि कामभोगानुबद्धा कथा । इदं तु नित्यव्यक्ततयांतः प्रकाशमानमपि कषायचक्रेण सहैकीक्रियमाणत्वादत्यंततिरोभूतं सत्स्वस्यानात्मज्ञतया परेषामात्मज्ञानामनुपासनाच्च न कदाचिदपि श्रुतपूर्वं न कदाचिदपि परिचितपूर्वं न कदाचिदप्यनुभूतपूर्वं च निर्मलविवेकालोकविविक्तं केवलमेकत्वं अतएकत्वस्य न सुलभत्वं ॥ ४ ॥ अथ एवंतस्य उपदर्श्यते–

**तं एयत्तविभत्तं दाएहं अप्पणो सविहवेण ।**
**जदि दाएज्ज पमाणं चुक्किज्ज छलं ण घित्तव्वं ॥ ५ ॥**

तमेकत्वविभक्तं दर्शयेहमात्मनः स्वविभवेन ।
यदि दर्शयेयं प्रमाणं स्खलितं छलं न गृहीतव्यं ॥ ५ ॥

तात्पर्यवृत्तिः–**तं** तत्पूर्वोक्तं **एयत्तविभत्तं** एकत्वविभक्तं अभेदरत्नत्रयैकपरिणतं मिथ्यात्वरागादिरहितं परमात्मस्वरूपमित्यर्थः । **दाएहं** दर्शयेहं केन **अप्पणो सविहवेण** आत्मनः स्वकीयमिति विभवेन आगमतर्कपरमगुरूपदेशस्वसंवेदनप्रत्यक्षेणेति । **जदि दाएज्ज** यदि दर्शयेयं तदा **पमाणं** स्वसंवेदनज्ञानेन परीक्ष्य प्रमाणीकर्त्तव्यं भवद्भिः । **चुक्किज्ज** यदि च्युतो भवामि **छलं ण घित्तव्वं** तर्हि छलं न ग्राह्यं दुर्जनवदिति ॥ ५ ॥ अथ कोयं शुद्धात्मेति पृष्टे प्रत्युत्तरं ददाति–

आत्मख्यातिः–इह किल सकलोद्भासिस्यात्पदमुद्रितशब्दब्रह्मोपासनजन्मा समस्तविपक्षक्षोदक्षमातिनिस्तुषयुक्त्यवलंबनजन्मा निर्मलविज्ञानघनांतर्निमग्नपरापरगुरुप्रसादीकृतशुद्धात्मतत्त्वानुशासनजन्मा अनवरतस्यंदिसुंदरानंदमुद्रितामंदसंविदात्मकस्वसंवेदनजन्मा च यः कश्चनापि ममात्मनः स्वो विभवस्तेन समस्तेनापि यमेकत्वविभक्तमात्मानं दर्शयेहमिति बद्धव्यवसायोस्मि । किंतु यदि दर्शयेयं तदा स्वयमेव स्वानुभवप्रत्यक्षेण परीक्ष्य प्रमाणीकर्त्तव्यं । यदि तु स्खलेयं तदा तु न छलग्रहणजागरूकैर्भवितव्यं ॥ ५ ॥

